# विक्रेयसंस्कृतपुस्तकानि ।

## श्रीमद्भगवद्गीता ।

### प्रथमगुच्छः ।

**Bhagavat-Geeta with 7 commentaries**

( प्रथमोगुच्छः ) आनन्दगिरिकृतटीकासंवलितशांकरभाष्य–जयतीर्थविरचितटीकासंवलितानन्दतीर्थीय (माध्य) भाष्य–रामानुजभाष्य–पुरुषोत्तमजीप्रकाशितामृततरङ्गिणी–नीलकण्ठीसमेता । मञ्जुलैरायसाक्षरैर्मुद्रिता । पृष्ठान्यष्टशतपरिमितानि सुचिक्कणानि । मूल्यम् रू. ६–०–०.

## श्रीमद्भगवद्गीता ।

### द्वितीयो गुच्छः । प्रथमषट्कम् ।

**Bhagavat-Geeta with 8 another commentaries 1st part**

निम्बार्कमतानुयायिश्रीकेशवकाश्मीरिभट्टाचार्यपादप्रणीता–'तत्त्वप्रकाशिका' श्रीमधुसूदनसरस्वतीकृता 'गूढार्थदीपिका' श्रीशङ्करानन्दप्रणीता–'तात्पर्यबोधिनी' श्रीधरस्वामिकृता–'सुबोधिनी' श्रीसदानन्द-विरचित:–'भावप्रकाशः' श्रीधनपतिसूरिविरचिता–'भाष्योत्कर्षदीपिका' दैवज्ञपण्डितश्रीसूर्यविरचिता–'परमार्थप्रपा' पूर्णप्रज्ञमतानुसारिश्रीराघवेन्द्रकृतः–'अर्थसंग्रहः' इत्येताभिर्व्याख्याभिः सहितायाः श्रीमद्भगवद्गीतायाः प्रथमादिषडध्यायात्मकं प्रथमं खण्डम् । अत्र श्लोकाः स्थूलतमाक्षरैष्टीकाश्च स्थूलाक्षरैर्मुद्रिताः, वृद्धा न क्लिश्नीयुरिति । पत्रसंख्या सार्धपञ्चशतानि । अग्रेतने च षट्के शीघ्रमेव प्रकाशयिष्यामः । प्रथमषट्कस्य मूल्यम् रू.३–१२–०.

## श्रीमद्वाल्मीकिरामायणम् ।

### बालकाण्डम् ।

**Valmiki Ramayana with 3 well-known commentaries 1st part**

सर्वतन्त्रस्वतन्त्रप्रतिभेन शब्देन्दुशेखरादिनानानिबन्धप्रणेत्रा श्रीमन्नागेशभट्टेन स्वशिष्यस्य सतो जीविकाप्रदातुःशृङ्गवेरपुराधीशस्य वीरमणेः श्रीरामराजस्य नाम्ना प्रणीतया रामायणतिलकाख्यया टीकया, पण्डितश्रीवंशीधर–शिवसहायाभ्यां प्रणीतया रामायणशिरोमण्याख्यया टीकया, श्रीगोविन्दराजप्रणीतया भूषणाख्यया टीकया च सह मुद्रयितुमारब्धमस्माभिः श्रीमद्वाल्मीकिरामायणम् । तच्च षड्भिः खण्डैः समापयिष्यामः । तत्रेदं प्रथमं खण्डम् । अत्र पारायणकृतां सौकर्याय पत्रस्याग्रे श्लोकाः स्थूलाक्षरैरधोरेखया टीकाभ्यः पृथक्कृत्य स्थापिताः । टीकाश्च प्रतिश्लोकं प्रविभज्य रामायणतिलकः, रामायणशिरोमणिः, रामायणभूषणं चेति क्रमेण निवेशिताः । अस्य श्लोकस्येदं टीकात्रितयमिति परिज्ञानाय मूलस्थश्लोकाङ्कस्तिलकटीकया आदौ स्थूलाकारेण परिदर्शितः । मूलं तु तिलकटीकानुरोधि स्थापितम् । तत्रादृष्टाः शिरोमणिकृता भूषणकृता च धृताः पाठाष्टिप्पनीरूपेणाधस्ताद्दर्शिताः । अधिकपाठस्तु मूल एव चिह्नयित्वा यथास्थानं स्थापितः । पत्रसंख्या च चतुःशतेभ्योऽधिका । अग्रेतनानि खण्डानि यथाक्रमं क्षिप्रमेव प्रकाशयिष्यामः । प्रथमखण्डस्य मूल्यम् रू. ३–०–०.

## कारिकावली ।

### सिद्धान्तमुक्तावलीसहिता ।

**Karikavalee with Siddhanta-Muktavali and other notes**

न्यायवैशेषिकदर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्रन्थेषु सिद्धान्तमुक्तावलीसमुद्भासिता कारिकावली मूर्धाभिषिक्तेत्यत्र न विदुषां वैमत्यम् किंतु तत्र दीधितिकृदुपसृतया विवेकसरण्या संक्षेपतः सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति नव्याश्छात्राः, इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वतिविस्तृतां सरलां सुबोधां च टिप्पनीं पण्डित–जीवरामशास्त्रिभिः कारयित्वा तया सहेयं दृढतरेषु सुचिक्कणेषु

च पत्रेषु स्थूलाक्षरैर्मुद्रिता। अस्याः सार्धशताभ्यधिकपत्रयुताया अपि सर्वसौलभ्याय मूल्यमतीव न्यूनं स्थापितम्। मूल्यम्. रू. ०-७-०.

## कुमारसंभवं महाकाव्यम्।

**Kumar Sambhav with 3 known commentaries**

कविवरश्रीकालिदासविरचितमिदं सप्तमसर्गपर्यन्तं मल्लिनाथकृतसंजीविन्या चारित्र्यवर्धनकृतशिशुहितैषिण्या च संवलितं तत आसमाप्ति सीतारामकृतसंजीविन्यालंकृतं सुललितैरायसाक्षरैर्मुद्रितमतीव दर्शनीयमस्ति। मूल्यम् रू. १-४-०.

## स्तोत्रमुक्ताहारः।

**Stotra-muktahar containing 256 Stotras**

अस्मिन् २५६ स्तोत्राणि संगृहीतानि। यद्यपि सन्ति भूरीणि स्तोत्रपुस्तकानि मुद्रितानि भूरिभिस्तथापि न तेष्वियतां स्तोत्ररत्नानां संग्रहः। अस्माभिः पूर्वमस्मुद्रितानां स्तोत्राणां पुस्तकानि काश्यादिक्षेत्रेभ्यो भूयसा प्रयासेन द्रविणव्ययेन च समासाद्य तेभ्यश्च प्रसादगुणयुक्तानि स्तोत्राणि संकलय्य संशोध्य च तानि भाविकजनानां कृतेऽत्र समावेशितानि तदाशास्महे श्रद्धावन्तो जनाः सफलयिष्यन्ति प्रयत्नमस्माकममुमिति। मूल्यम्. रू.०-८-०.

## विदुरनीतिः।

**Vidura-Niti with a commentary**

संस्कृतटीकोपेता नीतिशास्त्राभ्यासिनां विद्यार्थिनामतीवोपयोगिनी। मू. रू. ०-४-०.

## रघुवंशमहाकाव्यम्।

**Raghuvamsha with a commentary by Mallinatha**

श्रीकालिदासकृतम्। मल्लिनाथकृतसंजीविन्याख्यटीकासहितम्। मूल्यम् रू. ०-१०-०.

## वेदान्तरहस्यम्।

**Vedanta Rahasya**

वेदान्तवागीशभट्टाचार्यविरचितम्। अत्राद्वैतमतसिद्धान्तो निरूपितः। उपपत्तिश्च प्रदर्शिता। भाषाऽतिसरला प्रौढा च। मूल्यम्. रू. ०-१-०.

## उत्तरगीता।

**Uttara-Geeta with a commentary**

गौडपादीयदीपिकाख्यव्याख्यायुता। भगवत्पादश्रीशंकराचार्याणां परमगुरुभिः श्रीशुकाचार्याणां च शिष्यैः श्रीगौडपादाचार्यैः प्रणीतेयं व्याख्येत्येतावत्कथनमलमस्या महिमानमवगमयितुम्। मूल्यम् रू. ०-३-०.

## विशिष्टाद्वैतमतविजयवादः।

**Vishishtadvaita-Mata-Vijaya-Vada**

नरहरिपण्डितकृतः। अत्र विशिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्थापितम्। मूल्यम् रू. ०-१-०.

## प्रारब्धमुद्रणा ग्रन्थाः।

## तैत्तिरीयोपनिषत्।

**Taittiriya-Upanishat**

श्रीमच्छंकरभगवत्पादकृतभाष्येणानन्दगिरिकृतटीकायुतेन सहिता।

## संस्कारमयूखः।

**Samskar Mayukha**

श्रीनीलकण्ठभट्टसुतेन विदुषा श्रीशंकरभट्टेन कृतः।

## वैशेषिकदर्शनम्।

**Vaisheshika Darshana with several commentaries**

श्रीशंकरमिश्रकृतवैशेषिकसूत्रोपस्कारप्रभृतिव्याख्यानत्रयोपेतम्।

'गुजराती' प्रिंटिंग् मुद्रणालयाधिपतिः।

कोट सासून बिल्डिंग-मुंबई.